# परिशिष्टम् ।

## अथ स्नायुकनिदानम् ।

शाखासु कुपितो दोषः शोथं कृत्वा विसर्पवत् ॥
भिनत्ति तत्क्षते तत्र सोष्म स्नायुं विशोष्य च ॥ १ ॥
कुर्यात्तन्तुनिभं जीवं वृत्तं श्वेतद्युतिं बहिः ॥
शनैः शनैः क्षताद्याति छेदात्कोपमुपैति च ॥ २ ॥
तत्पाताच्छोथशान्तिः स्यात्पुनः स्थानान्तरे भवेत् ॥
स स्नायुकेति विख्यातः क्रियोक्ताऽत्र विसर्पवत् ॥ ३ ॥
बाह्वोर्यदि प्रमादेन त्रुट्यते जङ्घयोरपि ॥
संकोचं खञ्जतां चैव छिन्नतन्तुः करोत्यसौ ॥ ४ ॥
वातेन श्यावरूक्षः सरुगथ दहनान्नीलपीतः सदाहो-
ऽथश्वेतः श्लेष्मणा स्यात्पृथुगरिमयुतोऽथ द्विदोषो द्विलिङ्गी॥
रक्तेनारक्तकान्तिः समधिकदहनोऽथाखिलैः सर्वलिङ्गो
रोगोऽसावष्टधेत्थं मुनिभिरभिहितः स्नायुकस्तन्तुकीटः ॥५॥

इति स्नायुकनिदानं समाप्तम् ॥

---

## अथ फिरङ्गरोगनिदानम् ।

फिरङ्गसंज्ञके देशे बाहुल्येनैव यद्भवेत् ॥
तस्मात्फिरङ्ग इत्युक्तो व्याधिर्व्याधिविशारदैः ॥ १ ॥
गन्धरोगः फिरङ्गोऽयं जायते देहिनां ध्रुवम् ॥
फिरङ्गिनोऽङ्गसंसर्गात्फिरङ्गिण्याः प्रसंगतः ॥ २ ॥
व्याधिरागन्तुजो ह्येष दोषाणामत्र संक्रमः ॥
भवेत्तल्लक्षयेत्तेषां लक्षणैर्भिषजांवरः ॥ ३ ॥
फिरङ्गस्त्रिविधो ज्ञेयो बाह्य आभ्यन्तरस्तथा ॥
बहिरन्तर्भवश्चापि तेषां लिङ्गानि च ब्रुवे ॥ ४ ।
तत्र बाह्यः फिरङ्गः स्याद्विस्फोटसदृशोऽल्परुक् ॥
स्फुटितो व्रणवद्वैद्यैः सुखसाध्योऽपि सो मतः ॥

सन्धिष्वाभ्यन्तरः स स्यादामवात इव व्यथाम् ॥
शोफं च जनयेदेष कष्टसाध्यो बुधैः स्मृतः ॥ ६ ॥
कार्श्यं बलक्षयो नासाभङ्गो वह्नेश्च मन्दता ॥
अस्थिशोषोऽस्थिवक्रत्वं फिरङ्गोपद्रवा अमी ॥ ७ ॥
वहिर्भवो भवेत्साध्यो नवीनो निरुपद्रवः ॥
आभ्यन्तरस्तु कष्टेन साध्यः स्यादयमामयः ॥
वहिरन्तर्भवश्चापि क्षीणस्योपद्रवैर्युतः ॥
व्याप्तो व्याधिरसाध्योऽयमित्याहुर्मुनयः पुरा ॥

इति फिरङ्गनिदानं समाप्तम् ॥

---

## अथ सोमरोगनिदानम् ।

स्त्रीणामतिप्रसङ्गेन शोकाच्चापि श्रमादपि ॥
अतिसारकयोगाद्वा गरयोगात्तथैवच ॥ १ ॥
आपः सर्वशरीरस्थाः क्षुभ्यन्ति प्रस्रवन्ति च ॥
तस्यास्ताः प्रच्युताः स्थानान्मूत्रमार्गं व्रजन्ति हि ॥ २
प्रसन्ना विमलाः शीता निर्गन्धा नीरुजः सिताः ॥
स्रवन्ति चातिमात्रं ताः सा न शक्नोति दुर्वला ॥ ३ ॥
वेगं धारयितुं तासां न विन्दति सुखं क्वचित् ॥
शिरःशिथिलता तस्या मुखं तालु च शुष्यति ॥ ४ ॥
मूर्च्छा जृम्भा प्रलापश्च त्वग्रूक्षा चातिमात्रतः ॥
भक्ष्यैर्भोज्यैश्च पेयैश्च न तृप्तिं लभते क्वचित् ॥ ५ ॥
सन्धारणाच्छरीरस्य ता आपः सोमसंज्ञिताः ॥
ततः सोमक्षयात् स्त्रीणां सोमरोग इति स्मृतः ॥ ६ ॥

इति सोमरोगनिदानं समाप्तम् ॥

---